नातिविशेषः। यतो वा नाभेर्दशदिक्षु दशैते प्राणाः प्रादुर्भूय प्रवर्तन्ते, स एष नभ्यः प्राणः सर्वप्राणाधारो मनुर्नाम । सोऽहंपदेनाभिधीयते । तस्यैव प्रत्यग्ब्रह्मत्वात् स इन्द्रः ॥

इति सृष्टिनिरूपणं नाम द्वितीयं प्रकरणम् ।

समाप्तश्चायं प्रथमः खण्डः ।

---

संस्कृतव्याख्या

**सर्वप्राणाधारो मनुर्नाम ।** मानुषादिषु सर्वेषु पशुषु अयमेवार्धप्राणरूपो मनुरिन्द्रस्थानीय इति सुविशदं निरूपितं पूर्वप्रकरणे ।

**सोऽहंपदेन ।** मनुस्मृतौ अहंपदेन अयमेव मनुरुक्तः, मनुप्राणाविष्कारकेण मनुनाम्ना ख्यातेन पुरुषविशेषेण सा प्रोक्तेति अहंपदेन स मनुरात्मानमभिदधाति । यद्वा, सर्वेऽपि वयम् अहंपदेन यमभिदध्मः, सोऽयं मनुरूपः प्राण एव, विशुद्धचैतन्यरूपस्यात्मनः पदानभिधेयत्वात् । अत एव पञ्चदश्यां विद्यारण्यस्वामिभिर्मुख्यं चैतन्यमहंपदस्य लाक्षणिकोऽर्थः, प्राणाद्युपाधिविशिष्टस्तु मुख्योऽर्थ इति प्रतिपादितम् । तदेवात्राप्युच्यते । तस्यैव–प्राणस्यैव प्रत्यग्ब्रह्मत्वाद् व्यावहारिक आत्मा स एव मन्तव्य इत्यर्थः । अयं मनुरेव पशुषु इन्द्रस्थानीय इति पुनः स्पष्टीक्रियते **स इन्द्र** इति ।

इति 'महामहोपाध्याय' 'वाचस्पति' गिरिधरशर्मचतुर्वेदविरचिता महर्षिकुलवैभवस्य प्रथमखण्डव्याख्या समाप्तिमगात् ।

---

भाषाटीका

अर्थात् केन्द्रमें स्थित जिस मुख्य प्राणसे निकलते हैं, वह नभ्य प्राण सब प्राणोंका आधार मनु नामका प्राण है । इसका विस्तृत वर्णन पूर्व प्रकरणमें कर चुके हैं। मनुष्य आदि सब पशुओंमें अर्धेन्द्ररूप यही मनुप्राण इन्द्ररूपसे रहता है। हमलोगोंको जो 'मैं हूँ' ऐसा ज्ञान होता है उसका विषय यही मनु प्राण है, अर्थात् मनुप्राण ही अहंभाव प्रकट किया करता है । यही व्यवहारदशामें प्रत्यग्ब्रह्म कहलाता है। हमलोगोंका यही इन्द्र है । [ इस मनुप्राणके आविष्कर्त्ता मनुष्य मनुने मनुस्मृतिका उपदेश किया है, और मनुप्राण लक्ष्य करके ही 'अहं' शब्दका व्यवहार किया है ]

इस प्रकार सृष्टिनिरूपण नामके द्वितीय महाप्रकरणको समाप्त किया ।

प्रथमखण्ड समाप्त।

